The china rose 2.

[1]ओड्रपुष्पमभिधीयते [2]जपा ,

Many flowered nyktanthes 2.

[1]सप्तला च [2]नवमालिका स्मृता ॥२०७॥

A plant 2. / A tree 2.

[1]बन्धूकं [2]बन्धुजीवं स्यात्[1]पुन्नागः [2]सुरर्पणिका ।

A plant 4.

[1]अतिमुक्तकमिच्छन्ति [2]वासन्तीं [3]माधवीं [a][4]लताम् ॥२०८॥

A sort of cucumber 4.

[b][1]एर्वारुश्चिर्भटः [2]प्रोक्तो [3][c]वालुकी [4]कर्कटी तथा ।

A pumpkin gourd 2. / A long white gourd 3.

[1]कर्कारुरथ [2]कूष्माण्डस्[1]तुम्ब्य[2]लाबूश्च [3][d]दुग्धिका ॥२०९॥

Forest, wood 8.

[1]अरण्यम[2]टवी [3]सत्त्रं [4]कान्तारं [5]काननं [6]वनम् ।
[7]विपिनं [8]गहनं चेति [e]नातिभिन्नार्थमिष्यते ॥२१०॥

A long tract of forest, a grove or long row of trees, a path in a forest.

तटोपकण्ठे या जाता [1]वनराजी महीभृताम् ।

A land at the foot of a mountain. / Tableland, highland.

[1]उपत्यकां तु तामाहुरुपरिष्टाद[1]धित्यकाम् ॥२११॥
नगरान्नातिदूरेण यः सद्भिरुपरोपितः ।

A grove, a plantation 2.

[f]तरुषण्डः स [1]आरामस्तथो[2]पवनमुच्यते ॥२१२॥

विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् ,
शुद्धान्तैः सह रमते [g]गृहोपकण्ठे ।

A garden.

उद्यानं स्वयमपरैः समं च लोकै--
रन्येषां विभववतां च पुष्पवाटी ॥२१३॥

Elephant 14.

[1]मातङ्ग[2]द्विरद[3]द्विपाः [4]करि[5]गज[6]स्तम्बेरमा[7]नेकपाः ,
[8]कुम्भी[9]कुञ्जर[10]वारणे[11]भ[12]रदिनः [13]सामोद्भवः [14]सिन्धुरः ।

Lion 9.

तुल्यार्थाः कथिता [1]हरि[2]र्मृगपतिः [3]पञ्चाननः [4]केसरी ,
[5]हर्यक्षो [6]नखरायुधो [7]मृगरिपुः [8]सिंहश्च [9]कण्ठीरवः ॥२१४॥

One of the 3 divisions of elephants.

[1]भद्रो [2]मन्दो [3]मृगश्चेति विज्ञेयास्त्रिविधा गजाः ।
वनप्रचारसारूप्यसत्त्वभेदोपलक्षिताः ॥२१५॥

a माधवीलता, माधवीं माधवीं लतां, माधवो लता,
b ईर्वारश्चर्भटः, एर्वारुश्चिर्भटः, एर्वारश्चिर्भटः, एर्वातुश्चितिः, एर्वारुश्चिर्भिटः c वालुंकी d दुश्चिका, दुग्धिका दुधिका, e नातिनानार्थ f तरुखंडः तरुपंडः g कण्ठम् ।

| | | |
|---|---|---|
| A lump uopn the head of an elephant in rut. 2. | [a][1]मूर्धपिण्डौ स्मृतौ [2]कुम्भौ कुम्भयोरन्तरं विदुः । | |
| An elephant's cheek, elephant's temple 3. | [b][1]करटः [2][c]स्यात्कटो [3]गण्डो [1]वमथुः [d][2]करसीकरः ॥२१६॥ | Water thrown out by an elephant's trunk 2. |
| Ichor or juice that exudes from the temple of an elephant in rut 2. | [1]दानं [2]मदो [1]विषाणौ च [2]दशनौ [1]स्कन्ध [2]आसनम् । | The trunk of an elephant 2. Front part of an elephant's body 2. |
| | [1]अपाङ्गदेशो [2]निर्याणं [1]कर्णमूलं तु [2]चूलिका ॥२१७॥ | The outer corner of the eye cf an elephant 2 The root of an elephant's ear 2. |
| The forehead of an elephant 2. | [1]अवग्रहो [2]ललाटं [1]स्यादारक्षः [2]कुम्भयोरधः । | The junction of the frontal sinuses of an elephant 2. |
| The part of an elephant's head between the tusks. | दन्तयोरुभयोर्मध्यं [1]प्रतिमानं प्रचक्ष्यते ॥२१८॥ | |
| The tip of an elephant's trunk 4. | [1]कराग्रं [2]पुष्करं [3]प्रोक्तमङ्गुलिः [4]कर्णिका मता । | |
| The tip or root of an elephant's tail 2 | [1][e]पेचकः [2]पुच्छमूलं तु [1]पद्मं स्याद् [2]विन्दुजालकम् ॥२१९॥ | The coloured marks on the trunk and face of an elephant2. |
| An elephant in rut 3. | [1]लग्नः [2]प्रभिन्नो [3]मत्तः [1][f]स्यादुपात्तो [2]मदवर्जितः । | An elephant out of rut 2. |
| | [g]तिर्यग्दन्तप्रहारस्तु गजः [1]परिणतो मतः ॥२२०॥ | An elephant stooping to strike with his tusks or giving a side blow with his tusks. |
| Arranged for war 2. | [h][1]सज्जितः [2]कल्पितो ज्ञेयो बहूनां घटना घटा । | |
| An elephant's girth 3. | [i][1]चूषा [2]कक्ष्या [3]वरत्रा [h]स्यादालानं स्तम्भ उच्यते ॥२२१॥ | |
| Spurring of an elephant by means of the rider's feet 2. | [1]पादकर्म [j][2]यतं प्रोक्तं [1]यातम[2]ङ्कुशवारणम् । | Guiding an elephants, with the hook 2. |
| Pricking an elephant with the goad and striking with the legs. | [k]उभयं [1]वीतमाख्यातं भेदः [1]स्थूलोच्चयो गतेः ॥२२२॥ | The middle pace of elephants, a hollow at the root of an elephant's tusk. |
| The root of the teeth 2. | [1]करीरी [2]दन्तमूलं [1]स्याद्वारी च [2]गजबन्धनम् । | The place where elephants are tied up 2. |
| The chain used to secure the hind feet of an elephant 4. | [1]निगडः पादबन्धश्च [2]हिञ्जीरः [3]शृङ्खलो[4]ऽन्दुकः ॥२२३॥ | |
| A young elephant. | [1]कलभः [2]करिपोतः [1]स्यादङ्कुशः [2][l]सृणिरुच्यते । | A goad for driving an elephant 2. |
| A royal elephant 2. | [1]औपवाह्यो [2]राजवाह्यः [m][1]सन्नाह्यः समरोचितः ॥२२४॥ | An elephant fit for war 1. |
| A vicious elephant2. | [1]व्यालो [2]दुष्टगजः प्रोक्तो [1]हस्तिनी तु [2]वशा स्मृता । | The female elephant 2. |

a मूर्ध्नि b करकः c कटोगुस्नो, फटो गञ्जो d करशीरः e पेचुकः, पचकः, पेयुकः f स्यादुद्धातो g तिर्यग्दत्त h सजितः i भूषा, कक्षा, वक्षा **j** युतं, पादकमायातं, पादकमायतं **k** उभयो, उभय l शृणि, श्रेणि m सान्नाह्यः, सनाह्यः ।

The china rose 2.

[1]ओड्रपुष्पमभिधीयते [2]जपा ,

Many flowered nyktanthes 2.

[1]सप्तला च [2]नवमालिका स्मृता ॥२०७॥

A plant 2. — A tree 2.

[1]बन्धूकं [2]बन्धुजीवं स्यात्[1]पुन्नागः [2]सुरपर्णिका ।

A plant 4.

[1]अतिमुक्तकमिच्छन्ति [2]वासन्तीं [3]माधवीं [a][4]लताम् ॥२०८॥

A sort of cucumber 4.

[b][1]एर्वारुश्चि[2]र्भटः प्रोक्तो [3]वालुकी[c] [4]कर्कटी तथा ।

A pumpkin gourd 2. — A long white gourd 3.

[1]कर्कारुरथ [2]कूष्माण्डस्तु[1]म्ब्यला[2]बूश्च [3]दुग्धिका[d] ॥२०९॥

Forest, wood 8.

[1]अरण्य[2]मटवी [3]सत्त्रं [4]कान्तारं [5]काननं [6]वनम् ।

[7]विपिनं [8]गहनं चेति नातिभिन्नार्थ[e]मिष्यते ॥२१०॥

A long tract of forest, a grove or long row of trees, a path in a forest.

तटोपकण्ठे या जाता [1]वनराजी महीभृताम् ।

A land at the foot of a mountain. — Tableland, highland.

[1]उपत्यकां तु तामाहुरुपरिष्टाद[1]धित्यकाम् ॥२११॥

A grove, a plantation 2.

नगरान्नातिदूरेण यः सद्भिरुपरोपितः ।

[f]तरुषण्डः स [1]आरामस्तथो[2]पवनमुच्यते ॥२१२॥

विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् ,

शुद्धान्तैः सह रमते गृहोपकण्ठे[g] ।

A garden.

उद्यानं स्वयमपरैः समं च लोकै—

रन्येषां विभववतां च पुष्पवाटी ॥२१३॥

Elephant 14.

[1]मात[2]ङ्गद्विरद[3]द्विपाः [4]करि[5]गज[6]स्तम्बेरमा[7]नेकपाः ,

[8]कुम्भी[9]कुञ्जर[10]वारणे[11]भ[12]रदिनः [13]सामोद्भवः [14]सिन्धुरः ।

Lion 9.

तुल्यार्थाः कथिता [1]हरि[2]र्मृगपतिः [3]पञ्चाननः [4]केसरी ,

[5]हर्यक्षो [6]नखरायुधो [7]मृगरिपुः [8]सिंहश्च [9]कण्ठीरवः ॥२१४॥

One of the 3 divisions of elephants.

[1]भद्रो [2]मन्दो [3]मृगश्चेति विज्ञेयास्त्रिविधा गजाः ।

वनप्रचारसारूप्यसत्त्वभेदोपलक्षिताः ॥२१५॥

a माधवीलता, माधवीं माधवीं लतां, माधवौ लता,
b ईर्वारुश्चर्भटः, एर्वारुश्चिर्भटः, एर्वारश्चिर्भटः, एर्वातुश्चितिः,
एर्वारुश्चिर्भिटः c वालुंकी d दुश्चिका, दुग्धिका
दुधिका, e नातिनानार्थ f तरुखंडः तरुपंडः g कण्ठम् ।

| | | |
|---|---|---|
| A lump uopn the head of an elephant in rut. 2. | [a][1] मूर्धपिण्डौ स्मृतौ [2] कुम्भौ कुम्भयोरन्तरं विदुः । | |
| An elephant's cheek, elephant's temple 3. | [b][1] करटः [2][c] स्यात्कटो [3] गण्डो [1] वमथुः [d][2] करसीकरः ॥२१६॥ | Water thrown out by an elephant's trunk 2. |
| Ichor or juice that exudes from the temple of an elephant in rut 2. | [1] दानं [2] मदो [1] विषाणौ च [2] दशनौ [1] स्कन्ध [2] आसनम् । | The trunk of an elephant 2. Front part of an elephant's body 2. |
| | [1] अपाङ्गदेशो [2] निर्याणं [1] कर्णमूलं तु [2] चूलिका ॥२१७॥ | The outer corner of the eye cf an elephant 2 The root of an elephant's ear 2. |
| The forehead of an elephant 2. | [1] अवग्रहो [2] ललाटं [1] स्यादारक्षः [2] कुम्भयोरधः । | The junction of the frontal sinuses of an elephant 2. |
| The part of an elephant's head between the tusks. | दन्तयोरुभयोर्मध्यं [1] प्रतिमानं प्रचक्ष्यते ॥२१८॥ | |
| The tip of an elephant's trunk 4. | [1] कराग्रं [2] पुष्करं [3] प्रोक्तमङ्गुलिः [4] कर्णिका मता । | |
| The tip or root of an elephant's tail 2 | [1][e] पेचकः [2] पुच्छमूलं तु [1] पद्मं स्याद् [2] विन्दुजालकम् ॥२१९॥ | The coloured marks on the trunk and face of an elephant2. |
| An elephant in rut 3. | [1] लग्नः [2] प्रभिन्नो [3] मत्तः [1][f] स्यादुपात्तो [2] मदवर्जितः । | An elephant out of rut 2. |
| | [g] तिर्यग्दन्तप्रहारस्तु गजः [1] परिणतो मतः ॥२२०॥ | An elephant stooping to strike with his tusks or giving a side blow with his tusks. |
| Arranged for war 2. | [h][1] सज्जितः [2] कल्पितो ज्ञेयो बहूनां घटना घटा । | |
| An elephant's girth 3. | [i][1] चूषा [2] कक्ष्या [3] वरत्रा [h] स्यादालानं स्तम्भ उच्यते ॥२२१॥ | |
| Spurring of an elephant by means of the rider's feet 2. | [1] पादकर्म [j][2] यतं प्रोक्तं [1][2] यातमङ्कुशवारणम् । | Guiding an elephants, with the hook 2. |
| Pricking an elephant with the goad and striking with the legs. | [k] उभयं [1] वीतमाख्यातं भेदः [1] स्थूलोच्चयो गतेः ॥२२२॥ | The middle pace of elephants, a hollow at the root of an elephant's tusk. |
| The root of the teeth 2. | [1] करीरी [2] दन्तमूलं [1] स्याद्वारी च [2] गजबन्धनम् । | The place where elephants are tied up 2. |
| The chain used to secure the hind feet of an elephant 4. | [1] निगडः पादबन्धश्च [2] हिञ्जीरः [3][4] शृङ्खलोऽन्दुकः ॥२२३॥ | |
| A young elephant. | [1] कलभः [2] करिपोतः [1] स्यादङ्कुशः [2][l] सृणिरुच्यते । | A goad for driving an elephant 2. |
| A royal elephant 2. | [1] औपवाह्यो [2] राजवाह्यः [m][1] सन्नाह्यः समरोचितः ॥२२४॥ | An elephant fit for war 1. |
| A vicious elephant2. | [1] व्यालो [2] दुष्टगजः प्रोक्तो [1] हस्तिनी तु [2] वशा स्मृता । | The female elephant 2. |

a मूर्ध्नि b करकः c कटोगुस्नो, फटो गञ्जो d करशीरः e पेचुकः, पचकः, पेयुकः f स्यादुद्धातो g तिर्यग्दत्त h सजितः i भूषा, कक्षा, वक्षा j युतं, पादकमायातं, पादकमायतं k उभयो, उभय l शृणि, श्रेणि m सान्नाह्यः, सनाह्यः ।

An elephant-driver 4.

[1]आधोरणा [2]हस्तिपका [3]हस्त्यारोहा [4]निषादिनः ।

An elephant keeper 2.

[1]गजाजीवास्तु शास्त्रज्ञैर्[2]महामात्रा इति स्मृताः ॥२२५॥

A hog, a boar 8.

[1]कोलः [2]क्रोडः [3]शूकरः स्याद्[4]वराहः ,
[5]पोत्री [6]दंष्ट्री [7]घृष्टिरुक्तः [8][a]किरिश्च ।

Tiger, a hyena 7.

[1]व्याघ्रो [2]द्वीपी [3]पुण्डरीकस्[4]तरक्षुः ,
[5]शार्दूलः स्याच्[6]चित्रकायो [7]मृगारिः ॥२२६॥

Buffalo 5.

[1]महिषः [2][b]सैरिभ उक्तो [3]रक्ताक्षः [4]कासरो [5]लुलायश्च ।

A rhinoceros 3.

[1]वाध्रीणसश्च [2]खड्गी [3]गण्डक इति कथ्यते सद्भिः ॥२२७॥

A bear 4.

[1]ऋक्षा[2]च्छभल्ल[3][e]भाल्लूक[4]भल्लूकाश्च समाः स्मृताः ।

A wolf 4.

[1]अरण्यश्वा [2]बुधैर्ज्ञेयः [3]कोक [3]ईहामृगो [4]वृकः ॥२२८॥

A jackal, a fox 10.

[1]गोमायु[2][d]र्भूरिमायः [e]स्याच्[3]छृगालो [4]जम्बुकः [5]शिवा ।
[f]फेरण्डः [6]फेरवः [7]फेरुः [8]क्रोष्टा [9]च [10]मृगधूर्तकः ॥२२९॥

A kind of deer, an antelope 13.

[1]एणः [2]कुरङ्गो [3]हरिणो [4]मृगः स्यात्
[5]सारङ्ग [6][g]ऋष्यः [7]पृषतो [8]रुरुश्च ।
[9]न्यङ्कुस्तथा [10]रङ्कुरिति प्रसिद्धा ,
[11]वातप्रमी[12]शम्बर[h][13]कृष्णसाराः ॥२३०॥

An ape, a monkey 11.

[1]बलीमुखो [2]मर्कटको [3]वनौकाः ,
[4]प्लवङ्गमः स्यात्[5]प्लवगः [6]प्लवङ्गः ।
[7]हरिः [8]कपिः [9]कीश इमे च शब्दाः ,
[10]शाखामृगो [11]वानर इत्यभिन्नाः ॥२३१॥

a करिश्च, किरश्च, विडिश्व b सेरभ, सेरिभ c भालूकं d भूरिमायु
e स्यात् श्रृगालो, स्याछंगोलो f फेरुण्डः g ऋक्षः
h तप्तसाराः, तप्तस्याराः ।

| | | |
|---|---|---|
| A kind of monkey 1. Monkey tricks, monkey like behaviour. | [1]गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः । | |
| | कपेः क्रीडादिकं किञ्चित्कापेयमिति कथ्यते ॥२३२॥ | |
| Porcupine 3. | [1]शललः [2][a]शल्लकः [3]श्वावित्[1]तत्सूची [2]शललं [3]शलम् । | The quill of a Porcupine 3. |
| Beast of prey, wild beast. | व्याघ्रादयो वनचराः पशवः श्वापदाः स्मृताः ॥२३३॥ | |
| A kind of lizard 2. | [1]गोधा [b][2]मुशलिका प्रोक्ता [c]गौधेरास्तत्सुता मताः । | |
| The geeko 3. | [1]सरटः [2]कृकलासः स्यात्[3]प्रतिसूर्यशयानकः ॥२३४॥ | |
| A mouse, a rat 5. | [1]आखु[2]र्वृषो [3]मूषकः [d][4]स्यादुन्दुरः [5]खनकस्तथा । | |
| The musk rat. | [1]छुच्छुन्दरी च विज्ञेया विद्वद्भि[2]र्गन्धमूषिका ॥२३५॥ | |
| The cat 4. | [1]ओतु[2]र्विडालो [3]मार्जारो [4]वृषदंशश्च कथ्यते । | |
| A pole cat 3. | [1]जाहको [2]गात्रसङ्कोची [3]मण्डली च बुधैः स्मृतः ॥२३६॥ | |
| | [1]पतन्[2]पतङ्गः [3]पतगः [4]पतत्री , | |
| | [5]पत्त्री [6]शकुन्तिः [7]शकुनिः [8]शकुन्तः । | |
| A bird 26. | [9]वयो [10]विहायो [11]विहगो [12]विहङ्गो , | |
| | [13]विहङ्गमः [14]पत्त्ररथो [15]गरुत्मान् ॥२३७॥ | |
| | [16]शकुनः [17]खगो [18]नगौकाः [19]पक्षी [20]वि[21]र्विष्किरस्तथा[e] [22]विकिरः । | |
| | [23]अण्डज[24]नीडज[25]वाजि[26]द्विजाश्च कथिताः समानार्थाः ॥२३८॥ | |
| The wing of a bird 9. | [1]तनूरुहं [2]गरुत्[3]पत्त्रं [4]पतत्रं [5]छदनं [6]छदः । | |
| | [7]पिच्छं [8][f]वाजस्तथा [9]पक्षः [1]पक्षमूलं तु [2]पक्षतिः ॥२३९॥ | The tip of a bird's wing 2 |
| An egg 2. | [1][g]पेशीकोशः [2]स्मृतोऽण्डश्च [1]कुलायो [2]नीड उच्यते । | A nest 2. |
| The beak or bill of a bird 3. | [1]चञ्चुश्च[2]ञ्चूस्तथा [3]त्रोटि[1]र्डयनं गगने गतिः ॥२४०॥ | Flying in the air 1. |

a शल्यकः b मुशली c गोवेरा, गोधेरा d स्यादुंदरुः, स्यादंदरः
e विर्विकरस्तथा f वाजिस्तथा g पेशी कोशः।

1 केकी 2 शिखी 3 शिखण्डी 4 प्रचलाकी 5 बर्हिणः 6 कलापी च ।
A peacock 10. 7 सर्पाशनो 8 मयूरः 9 शिखावलः 10 श्यामकण्ठश्च ॥२४१॥

A peacock's crest 2. वाणी केका 1 शिखा 2 चूडा 1 चन्द्रको 2 मेचकः स्मृतः । An eye in the feathers of a peacock's tail 2.
A peacock's tail 4. 1 प्रचलाकः 2 शिखण्डश्च 3 कलापो 4 बर्हं उच्यते ॥२४२॥

The cuckoo 5. 1 अन्यभृतः 2 परपुष्टः 3 कलकण्ठः 4 कोकिलः 5 पिकः प्रोक्तः ।
A sparrow 4. 1 कलविङ्कश्चटकः 2 स्याद् 3 गृहबलिभुक् 4 नीलकण्ठश्च ॥२४३॥

A heron 2. 1 क्रौञ्चः 2 क्रुङ्क स्यात् 1 खञ्जनः 2 खञ्जरीटः A wagtail 2.
1 कोकश्चक्र 2 श्चक्रवाको 3 रथाङ्गः । The ruddy goose.
1 दार्वाघाटः 2 सारसः 3 पुष्कराख्यः , The crane, woodpecker 3.
The female crane 2. प्रोक्ता सद्भिः 1 सारसी 2 लक्ष्मणा च ॥२४४॥

A crow 10. 1 अरिष्टः 2 करटः 3 काको 4 बलिपुष्टः 5 सकृत्प्रजः ।
6 एकदृग् 7 बलिभुक् 8 ध्वाङ्क्ष 9 श्चिरञ्जीवी च 10 वायसः ॥२४५॥

An owl 4. 1 उलूकः 2 कौशिकः प्रोक्तो 3 ध्वाङ्क्षाराति 4 र्निशाटनः ।
A raven 5. 1 काकोलो a 2 मौकलि 3 र्द्रोणः 4 कृष्णकाको 5 वनाश्रयः ॥२४६॥

A cock 4. 1 कृकवाकु 2 स्ताम्रचूडः 3 कुक्कुट 4 श्चरणायुधः ।
The blue jay 2. 1 किकिदीविः 2 स्मृतश्चाषः 1 शकुन्तो b 2 भास उच्यते ॥२४७॥ The vulture 2.

The fork tailed shrike 3. 1 भृङ्गः 2 कलिङ्गो 3 धूम्याटः 1 सारङ्ग 2 श्चातको मतः । A kind of bird 2.
A skylark 2. 1 व्याघ्राटस्तु 2 भरद्वाजः 1 शुकः 2 कीर उदाहृतः ॥२४८॥ A parrot 2.

A kind of bird 3. 1 आटिः c 2 शरारि 3 राटिः स्या 1 दुत्क्रोशः 2 कुररो मतः । An osprey 2.
A species of water bird. 1 दात्यूहो 2 जलरङ्कुः स्यात् 1 कोयष्टिः 2 शिखरी स्मृतः ॥२४९॥ A sort of aquatic bird 2.

a मौष्कलि, मौकलि, मौद्गबि　b भाश　c शरारिराख्यात उत्क्रो ।

| | | |
|---|---|---|
| A crane. | वको[1] वकोटो[2] विज्ञेयो बलाका[1] विसकण्ठिका[2] । | A sort of female crane 2. |
| A kite 3. | आतायी[1a] शकुनिश्[2] चिल्लो[3] मद्गुः[1] स्याज्जलवायसः[2] ॥२५०॥ | The diver bird 2. |
| A swan, a gander 4. | हंसाः[1] श्वेतच्छदाः[2] प्रोक्ताश्चक्राङ्गा[3] मानसौकसः[4] । | |
| A goose 4. | वारला[1] हंसकान्ता[2] स्याद्वरला[3] वरटा[4] तथा ॥२५१॥ | |
| A flamingo, a sort of goose with red legs and bill. | आताम्रै राजहंसाश्च[1] धार्तराष्ट्राः[1] सितेतरैः । | A sort of goose with black legs & bill. |
| | मलिनैर्मल्लिकाख्याश्च कथ्यन्ते चरणाननैः ॥२५२॥ | A sort of goose with brown legs and bill. |
| A drake, a duck. | पक्षैराधूसरैर्हंसाः कलहंसा[1] इति स्मृताः । | |
| A sort of falcon 2. | प्रोच्यन्ते प्राचिकाः[1][b] श्येनाश्[2] चटिकाः[1] क्षुद्रपक्षिकाः[2] ॥२५३॥ | A small bird 2. |
| | जीवञ्जीवकपिञ्जलचकोरहारीतवञ्जुलकपोताः । | |
| | कारण्डवकादम्बक्रकराद्याः[c] पक्षिजातयो ज्ञेयाः ॥२५४॥ | |
| A bee 13. | मधुकर[1]मधुप[2]मधुव्रत[3]शिलीमुख[4]भ्रमर[5]भृङ्ग[6]पुष्पलिहः[7] । | |
| | इन्दिन्दिरा[8]लि[9]षट्चरण[10]चञ्चरीका[d][11]लिनो[12] द्विरेफाः[13] स्युः ॥२५५॥ | |
| A cricket. | झिल्लीका[1] चीरी[2] स्यात्सरघा[1] मधुमक्षिका[2] भवेत्क्षुद्रा[3] । | A bee 3. |
| A spider 5. | लूता[1]र्णनाभ[2]मर्कट[3]जालिक[4]क्रमय[e][5]श्च तुल्यार्थाः ॥२५६॥ | |
| A moth 2. | पतङ्गः[1] शलभः[2] प्रोक्तः खद्योतो[1] द्योतिरिङ्गणः[2][f] । | A glow-worm, a fire-fly 2. |
| A sort of lizard. | हालाहल[1]श्चाञ्जनिका[2] ज्येष्ठा[1] स्याद् गृहगोधिका[2] ॥२५७॥ | A house-lizard. |
| A village 4. | ग्रामः[1] संवसथो[2] ज्ञेयो ग्रामाधानं[3] च खेटकम्[4] । | |
| Born or living in a village 3. | ग्रामीणास्तु[1] निगद्यन्ते ग्राम्या[2] ग्रामेयका[3] इति ॥२५८॥ | |
| | ग्रामान्तिकमुपशल्यं पर्यन्तः परिसरः कटः[1] प्रोक्तः । | Out skirts of a village or town. |
| Limit, boundary 5. | अवधि[1]र्मर्यादा[2] स्यादाघाटः[3] सीम[4] सीमा[5] च ॥२५९॥ | |

a आतापी b प्राचिका सेना चटिका, सेनाश्चिटिका, सेनाश्चिटिकाः c कारंडवकादंबकचक्रकाराद्याः, कारंकारंडवकादंवकराद्याः, कादवः कदंबकः, क्रकराद्याः, कारंडवकादंबकः क्रकराद्याः, कारंडवकादंबकक्रकराद्याः d चिंचिरीका, चिंचरीका, चिरीका e क्रिमयश्च, क्रमयश्च f ज्योतिरिंगिणः, ज्योतिरिंगणः, द्योतिरिंगणः, द्योतिरंगण ।

A way, the road (also सृतिः)
1 2 3 4 5 6 7
अध्वा पन्थाः पद्धतिरेकपदी वर्त्म वर्तनी सरणिः ।
8 9 10 11 12
अयनं पदवी मार्गः पद्या च निगद्यतं निगमः ॥२६०॥

a
ग्रामयोरन्तरं दीर्घं प्रान्तरं परिकीर्त्यते । — A long lonesome or solitary path.

1 2 1 2
A hamlet, a station of cowherds 2. — घोष आभीरपल्लीस्यात्पक्कणः शवरालयः ॥२६१॥ — The hut of a barbarian or chāndāla.

1 2 3 4 5
A cowpen 5. — व्रजः स्याद् गोकुलं गोष्ठं गोवृन्दं गोधनं धनम् ।

1 2 3 1
Rich in cattle. — गोमान् गोमी च गोस्वामी गोविन्दोऽधिकृतो गवाम् ॥२६२॥ — The superintendent of cows 1.

1 2 3 4 5 6
An ox, a bull 11. — उक्षानड्वान्वलीवर्दः ककुद्मान्वृषभो वृषः ।
7 8 9 10 11
ऋषभः सौरभेयो गौर्वाडवेयोऽथ शाक्वरः ॥२६३॥

1 2 1 2
A calf 2. — तर्णकः स्मर्यते वत्सो दम्यो वत्सतरः स्मृतः । — A steer 2.

1
A bull fit for castration. — आर्षभ्यः स च विज्ञेयः षण्ढत्वे यस्य योग्यता ॥२६४॥

1 2 1 2
A large bull 2. — महोक्षः स्यादुक्षतरो वृद्धोक्षस्तु जरद्गवः । — An old ox 2.

1
The bullock attached to the shaft. — धुरं वहति यो धुर्यो धौरेयः स च कथ्यते ॥२६५॥

b 1 2 1 2
An ox carrying burden on his back 2. — स्थूरी स्यात्पृष्ठवाह्यस्तु स्कन्धिकः स्कन्धवाहकः । — An ox carrying burden on his shoulders 2.

1 2 1 2
A bull's hump 2. — अंसकूटस्तु ककुदं सास्ना स्याद् गलकम्बलः ॥२६६॥ — A dewlap 2

c 1 1
The head of an ox. — नीचकी च शिरोदेशः स्कन्धदेशो वहः स्मृतः । — The shoulder of an ox.

1 2 1 2
Nozzled with a string (नस्या) through the nose 2. — नस्योतो नस्तितः प्रोक्तः षोडन् षड्दशनः स्मृतः ॥ — A young ox that has got the first six teeth.

1 2 1 2
An ox whose horns are broken. — भग्नशृङ्गस्तु कूटः स्याद्विषाणं शृङ्गमुच्यते ॥२६७॥ — A horn 2.

1 2 3 4 5 6
अघ्न्या गौर्माहेयी सुरभिर्बहुला च सौरभेयी च ।
7 8 9 10 11
A cow 11. — उस्रार्जुनी च रोहिण्युक्तानडुही बुधैरनड्वाही ॥२६८॥

1 2 1 1 1 2
A cow that has taken the bull 2. A cow for the first time with a calf 2. — वेहद्वृषभोपगता प्रष्ठौही गर्भिणी वशा बन्ध्या । — A barren cow 2.

1 2 1 2 d
A milch cow. — धेनुर्नवप्रसूता वष्कयणी प्रौढवत्सा स्यात् ॥२६९॥ — A cow that has full grown calves.

a परिकीर्तितम् b स्थौरी स्यात्पृष्टि c नीचिकी d च ।

| | | |
|---|---|---|
| A cow which has miscarried 2. | [1]अवतोका [2]स्रवद्गर्भा [1]भद्रा [2]गौर्गोमतल्लिका । | An excellent cow 2 |
| A tractable cow 2. | [1]अचण्डी [a 2]सूरता प्रोक्ता [1]वत्सकामा तु [2]वत्सला ॥२७०॥ | A cow fond of her calf 2. |
| An udder 2. | [1]ऊधः स्यादापीनं[2] [1]पीनोध्नी [2]पीवरस्तनी प्रोक्ता । | A cow with a large udder 2. |
| An excellent cow 2. | [1]श्रेष्ठा च [2 b]नैचिकी स्याद्[1]द्रोणदुघा [2]प्रचुरदुग्धा च ॥२७१॥ | A cow yielding much milk 2. |
| A cow fit to receive the bull 2. | [1 2]काल्योपसर्या प्रजने प्रसिद्धा, | |
| A cow that has many calves 2. | [1]परेष्टुका च [c 2]प्रचुरप्रसूतिः । | |
| | विंजायते या प्रतिवत्सरं गौः, | |
| A cow bearing a calf every year. | [1]समांसमीनेति निगद्यतेऽसौ ॥२७२॥ | |
| A cow which has had only one calf, young cow. | [1]गृष्टिः सकृत्प्रसूता स्यात्[1]पलिक्नी [2]बालगर्भिणी । | A cow for the first time with calf 2. |
| Coming or got from a cow as milk, curd etc 2. | [1]गव्यं [2]गोसम्भवं सर्वं [1]करीषं [2]गोमयं स्मृतम् ॥२७३॥ | Cow dung 2. |
| Milk 6. | [1]ऊधस्यं [2]क्षीरं स्याद्[3]दुग्धं [4]स्तन्यं [5]पयश्च [6]पीयूषम् । | |
| Fresh butter 3. | [1]दधिसारं [2]नवनीतं ब्रुवते [3]हैयङ्गवीनं च ॥२७४॥ | |
| Name of butter-milk 6. | [1]तक्रम[2]रिष्टम[3]ुदश्विद्[4]दण्डाहत[5]कालशेय[6]मथितानि । | |
| Thin curd 2. | [1]द्रप्सं [2]दध्यघनं स्यात्[1]सर्पिर्[2]घृतम[3]ाज्यम[4]ाघारः ॥२७५॥ | Purified butter 4. |
| Thick, congealed 2. | [1]शीनं [2]स्त्यानं [1]श्रृतं [2]पक्वं [1]विलीनं [2]द्रुतमुच्यते । | Cooked, boiled 2. Melted, dissolved, liquified 2. |
| A churning stick 5. | [1]मन्था [2]मन्थश्च [3]मन्थानो [4]वैशाखः [5]खजकस्तथा ॥२७६॥ | |
| A rope for tying a cattle 3. | [1]सन्दानं [2 d]दामनी [3]दाम पशूनां बन्धनं मतम् । | |
| A ram 2. | [1]अजः प्रोक्तः [2]स्तभो [1 e]वस्तश्[2]छागश्[3]छगलकश्[4]छगः ॥२७७॥ | A goat 4. |
| Any young domestic animal. | [1]वर्करः कथ्यते सद्भिः सर्वोऽपि तरुणः पशुः । | |
| An animal without horns. | [1]तूवरः श्रृङ्गहीनस्तु पुमान[f]व्यञ्जनश्च यः ॥२७८॥ | |

a सूरिना, सूरिता b नीचकी, नैचका c प्रवृरप्रवृत्तिः d दामिनी e वस्तः छागः, गछः छागः, वस्तुः छागः, वर्त्संश्च्छागः गछछागछगल, f व्यंजनस्तु ।

1 2 3 4 5 6 7 8
A sheep 8. अविरूर्णायुरभ्रो हुडुरुरणो वृष्णिमेषमेण्ढाः स्युः ।

1 2 3
A ewe's milk 3. अविसोढमविमरीसं स्यादविदूसं च दुग्धमवेः ॥२७९॥

1 2 3 4 5 6 7
A camel 7. दासेरकः क्रमेलक उष्ट्रो मयरवणकरभशृङ्खलकाः ।

1 2 3 4 5
An ass 5. बालेयश्चक्रीवान् खरगर्दभरासभाश्च तुल्यार्थाः ॥२८०॥

1 2 3 4 5 a
A dog 8. कौलेयकः सारमेयो भषणः श्वा च कुर्कुरः ।

6 7 8
शुनको मृगदंशश्च बुधैः शालावृको मतः ॥२८१॥

1 b
A hunting dog 1. मृगव्ये कुशलः श्वा च विश्वकद्रुरिति स्मृतः ।

1 1 2
A mad dog 1. अलर्को रोगितो ज्ञेयः शुनकी सरमोच्यते ॥२८२॥ A bitch 2.

1 c
A yoke of six. पशूनां षट्कसंख्यायां षड्गवं स्मर्यते बुधैः ।

1
A pair, a couple. द्वित्वे च गोयुगं तेषां नामोच्चारणपूर्वकम् ॥२८३॥

1 2 3 d 4
A country 4. नीवृज्जनपदो देश उपवर्तनमिष्यते ।

1 2 3
People, man 3. जनो लोकः प्रजा प्रोक्ता विषयो ग्रामसंख्यया ॥२८४॥

1 2 3 4
A town 11. पत्तनं स्यादधिष्ठानं निगमः पुटभेदनम् ।

5 6 7 8 9 10 11
नगरं नगरी द्रङ्गः स्थानीयं पूः पुरी पुरम् ॥२८५॥

1 2
Capital 2. स्कन्धावार इति प्राज्ञै राजधानी निगद्यते ।

1 2
Suburb 2. शाखानगरमाख्यातं तथोपनगरं बुधैः ॥२८६॥

1 2 1 2
विदेहा मिथिला प्रोक्ता काशिर्वाराणसी स्मृता ।

1 e 2 1 2
अवन्त्युज्जयिनी ज्ञेया कन्यकुब्जा महोदया ॥२८७॥

f 1 2 1 2
An embankment at the gate of a city 2. हस्तिनखः परिकूटं च कथ्यते गोपुरं पुरद्वारम् । Gate of a city 2.

1 2 3 g 1 2
Rampart 3. वप्रं शालं प्राकारमाहुररं कपाटं च ॥२८८॥ The leaf of a door 2.

a कुक्कुरः b कद्रूरिति, विश्वद्भूरिति c षट्त्वं, षड्गु, षड्ग d उपपर्वत ।
e ज्जयनी f हस्तिनखं g हुररकं, हुररि, हुररीं, हुररं, हुररविं ।

| | | |
|---|---|---|
| Carriage road 3. | [1]प्रतोली [2]विशिखा [3]रथ्या [1]मुखं [2]निःसरणं स्मृतम् । | The entranee, egress or outlet from a building 2. |
| A place where several roads meet. | [1]शृङ्गाटकः पथां श्लेषः [2]संस्थानं [a]तु [3]चतुष्पथम् ॥२८९॥ | |
| Building site 2. | [1]गृहभूमिस्तु [2][b]वास्तुः [1]स्याद्वाट [2]आवेष्टको [3]वृतिः । | A wall, an enclosure 3. |
| A royal tent. | गृहस्थानं स्मृतं [1]राज्ञागुपकार्यो[2]पकारिका ॥२९०॥ | |
| A dwelling place or a dwelling house 30. | [1]आवासा[2]वसथं [3]गृहं च [4]भवनं [5]स्थानं [6]निशान्तं [7]कुलं , | |
| | [8]संस्त्यायो [9]निलयो [10]निकाय्य[11]मुटजं [12]गेहं [13]कुटं [14]मन्दिरम् । | |
| | [15]धिष्ण्यं [16]धाम [17]निकेतनं च [18]सदनं [19]पस्त्यं च [20]वास्तु [21]क्षयः | |
| | [22]शाला [23]वेश्म [24]निवेशनोदवसिते प्रोक्ते च [25]सद्मौ[26]कसी ॥२९१॥ | |
| | [27]शरण[28]मगारं [29]निवसन[30]मालय एकार्थवाचकाः शब्दाः । | |
| A lying in chamber 2. | [1]अपवरकं [2]गर्भगृहं [1]संजवनं [2]स्याच्चतुःशालम् ॥२९२॥ | A square formed by four houses 2. |
| A palace, a temple 1. | गृहमिष्टकादिरचितं [1]प्रासादो देवतानरेन्द्राणाम् । | |
| A shed for sacrifice 1. | [c][1]आयतनं देवानामन्येषां [d]धनवतां [1]हर्म्यम् ॥२९३॥ | Mansion, a palace. |
| A palace. | सुधाधवलितं सौधं कुट्टिमं बद्धभूमिकम् । | Paved floor 2. |
| A platform 2. | [e][1]इन्द्रकोश[2]स्तमङ्गः [1]स्यादट्ट[2]श्चाट्टालको मतः ॥२९४॥ | An attic 2. |
| A kichen 3. | [1]पाकस्थानं [2]रसवती कथ्यते [3]तन्महानसम् । | |
| Sleeping room 2. | उशन्ति [1]शयनस्थानं [2]वासागारं विशारदाः ॥२९५॥ | |
| A workshop 2. | [1]आवेशनं [2]शिल्पिशाला [1]वाजिशाला तु [2]मन्दुरा । | A stable 2. |
| A shop, a stall 3. | [1]पण्यविक्रयशाला [2]स्यादापणो [3]विपणिस्तथा ॥२९६॥ | |
| A manufactory 2. | [1]कर्मशाला च [2]कारूणामन्वासनमुदाहृतम् । | |
| A shed on the road for accommodating passengers with water 2 | [1]प्रपा [2]पानीयशाला [1]स्यात्सत्त्रशाला [2]प्रतिश्रयः ॥२९७॥ | A poor house 2. |

a च     b वास्तुं     c आयतनं च     d धनवतां च
e इन्द्रकोशस्तु, आवेशिनं ।

| | | |
|---|---|---|
| A shelter. | उपघ्न[1] आश्रयः[2] प्रोक्तो मुनीनां स्थानमाश्रमः । | Abode of mendicants. |
| The hut of an ascetic. | मठश्च[1] व्रतिनां स्थानं[a] मण्डपः[1] स्याज्जनाश्रयः ॥२९८॥ | A pavilion. |
| A terrace before a house 3. | वेश्मैकदेशः प्रघणः[1] प्रघाणः[2] स्यादलिन्दकः[3] । | |
| A court yard 2. | अजिरं[1] प्राङ्गणं[2] प्रोक्तं वेदिका[1] च वितर्दिका[2] ॥२९९॥ | A raised square ground 2. |
| The gate of a city 3. | द्वार्द्वारं[1][2] बलजं[3] ज्ञेयमर्गला[1] परिघः[2] स्मृतः । | A bolt 2. |
| The rentil of a door. | उत्तरङ्गं[1] मतं तिर्यक् द्वारस्योपरि दारु यत् ॥३००॥ | |
| Buntings 2. | बुधैर्वन्दनमाला[1] तु[b] तोरणं[2] परिकीर्त्यते । | |
| A ladder flight of stairs 4. | आरोहणं[1] स्यात्सोपानं[2] निःश्रेणि[3]रधिरोहिणी[4][c] ॥३०१॥ | |
| Threashold 2. | गृहावग्रहणी[d][1] प्रोक्ता देहली[2] तु[e] मनीषिभिः । | |
| A brush, a broom 2. | संमार्जनी[1] वर्धनी[2] स्यात्सङ्करो[1]ऽवकरः[f][2] स्मृतः ॥३०२॥ | Dustsweepings 2. |
| The wooden frame of a roof 2. | आच्छादनं[1] स्याद्वलभी[2] गृहाणां , | |
| A beam supporting the frame-work of a roof. | गोपानसी[1] दारु च वक्रसंस्थम् । | |
| Eaves. | नीव्रं[g][1] वलीकं[2] पटला[3] तमाहुः , | |
| A dove cot. | कपोतपाली[1][h] च विटङ्कसंज्ञा[2][i] ॥३०३॥ | |
| An airhole, a little round window 4. | वातायनो[1] गवाक्षश्च[2][j] जालकं[3] जालमुच्यते[4] । | |
| An inner court of a palace 2. | कक्षान्तरं[1] प्रकोष्ठं[2][k] च चन्द्रशाला[1] शिरोगृहम्[2] ॥३०४॥ | An upper storey 2. |
| A kind of palace. | स्वस्तिको[1] वर्धमानश्च[2] नन्द्यावर्तादयस्तथा[3] । | |
| | विच्छन्दकविशेषाः[4] स्युरमी भूपतिवेश्मनाम् ॥३०५॥ | |
| Retinue, follower, family 7. | परिवारः[1] परिकरः[2] परिस्पन्दः[3][l] परिग्रहः[4] । | |
| | तथोपकरणं[m][5] प्रोक्तं परिबर्हः[6] परिच्छदः[7][n] ॥३०६॥ | |

a व्रतिनां शाला b च c रोहणी d गृहाचगृहिणी e च f वस्करः, विक्किरः g नीर्ध्रं h पालीं i संज्ञाम् j गवाक्षस्तु k प्रकोष्टं स्यात्, प्रकाष्टं तु l परिस्यन्द m तथोपकारणं n परिछन्दः ।

| | | |
|---|---|---|
| Bed 5. | [1]पर्यङ्कः [2]शयनं [3]शय्या [4]तल्पं च [5]तलिनं स्मृतम् । | |
| A fence 2. | [a][1]अपाश्रयस्तु विद्वद्भिः कथ्यते [2]मत्तवारणः ॥३०७॥ | |
| A blanket. | [1]प्रवेण्या[2]स्तरणं [3]वर्णः [4]परिस्तोमः [5]कुथः [6]कुथा । | |
| | [b][7]नवतं चेति तुल्यार्थाः [1]प्रच्छदश्चो[2]त्तरच्छदः ॥३०८॥ | A cover, a wrapper 2 |
| A screen surrounding a tent 2. | [1]अपटी [2]काण्डपटः स्यात्[1]प्रतिसीरा [2]जवनिका [3]तिरस्करिणी । | A curtain 3. |
| A pillow 3. | [1]उच्छीर्षक[2]मुपधानं धीरै[3]रुपवर्हमाख्यातम् ॥३०९॥ | |
| An awing, a canopy 4. | [1]चन्द्रोदयो [2]वितानं स्या[3]दुल्लोचः [4]कदकस्तथा । | |
| A fan 2. | [1]व्यञ्जनं [2]तालवृन्तं च [1]विष्टरः [2]पीठ[3]मासनम् ॥३१०॥ | A seat, a chair 3. |
| A couch 2. | [1]वेत्रासनं तथा[2]सन्दी [1]कङ्कतं [2]केशमार्जनम् । | A comb 2. |
| A wooden shoe 4. | [1]पादुका[2]नुपदीना स्या[3]दुपानत्[4]पादरक्षणम् ॥३११॥ | |
| A wooden spoon or ladle 4. | [1]दर्वी [2]तर्दूश्च [c][3]खजिका कथ्यते [4]दारुहस्तकः । | |
| A basket 2. | [1]पेटां वदन्ति [2]मञ्जूषां [1]कुशूलं [2]धान्यकोष्ठकम् ॥३१२॥ | A granary 2. |
| A frying pan 2. | [1]अम्बरीषो भवेद् [2]भ्राष्ट्रः [1]कन्दुः [2]स्वेदनिका स्मृता । | An iron plate for baking cakes (तवा) |
| An oven 4. | [1]चुल्ल्य[2]श्मन्तक[d][3]मुद्ध्मानं स्मृता[4]धिश्रयणी बुधैः ॥३१३॥ | |
| A portable stove 3. | [1]अङ्गारशकटीं [2]प्राहुर्हसन्तीं च [3]हसन्तिकाम् । | |
| A pot 6. | [1]उखा [2]स्थाली [3]चरुः [4]कुम्भी [5]पिठरं [6]कुण्डमुच्यते ॥३१४॥ | |
| A boiler 2. | [1]कटाहः [2]कर्परो ज्ञेयो [1]भृङ्गारः [2]कनकालुका । | A golden vase 2. |
| A dish 3. | [1]शालाजिरो [2]वर्धमानः [3]शरावः स्मर्यते बुधैः ॥३१५॥ | |

a उपाश्रयस्तु, आयाश्रयस्तु, अपाश्रियस्तु  b नवनं  c खंजक, खजक, खदिका, खजाका  d मुध्मानं, मुद्धानं, मुद्रानं, मध्वानं ।

A kind of drinking vessel 2. | a 1 2 1 2 कोशिका मल्लिका प्रोक्ता पिधानं स्यादुदञ्चनम् । | A lid, a cover 2.

A water-jar 14. | 1 2 3 4 5 6 घटः करीरः कलशः कुटः कुम्भो निपः स्मृतः ॥३१६॥

7 8 9 10 कर्करी करकः प्रोक्तो वर्धनी च गलन्तिका ।

11 b 12 13 14 गर्गरी मन्थनी प्रोक्ता मणिकः स्यादलिञ्जरः ॥३१७॥

Sour gruel 9. | 1 2 3 c 4 5 धान्याम्लमारनालं सन्धानं काञ्जिकं च सौवीरम् ।

6 7 8 9 d अभिषवमवन्तिसोमं तुषोदकं शुक्तमिच्छन्ति ॥३१८॥

Boiled rice 7. | 1 2 e 3 4 5 6 f 7 अन्धः कूरं भक्तं दिदीविरन्नं तथौदनो भिस्सा ।

Food 2. | 1 2 1 2 g 3 अशनं स्यादाहारः पूपापूपौ च पूपलिका ॥३१९॥ | A ricecake 3.

Rice gruel 5. | 1 2 3 4 h 5 यवागूरुष्णिका श्राणा तरला च विलेपिका ।

Savoury food, a dainty dish made of milk 3. | i 1 2 3 क्षैरेयी पायसं गोक्तं परमान्नं च सूरिभिः ॥३२०॥

Sweets 2. | j 1 2 k 1 2 मिष्टान्नं व्यञ्जनं ज्ञेयं वेषवार उपस्करः । | Condiment 2.

Whey 2. | 1 2 1 2 दधिमण्डो भवेन्मस्तु करम्भो दधिसक्तवः ॥३२१॥ | Barley meal mixed with coagulated milk 2.

A kind of broth; made of or from or mixed or sprinkled with coagulated milk 3. | 1 2 3 1 2 दाधिकं संस्कृतं दध्ना सार्पिषं सर्पिषा स्मृतम् । | Dressed or cooked with clarified butter 2.

Salted prepared with brine, briny. | लवणोदकसंसिद्धमुदलावणिकं m मतम् ॥३२२॥

1 2 3 अङ्गारेषु विपक्वं मांसं भूतिर्भरूटकं भृष्टम् । | Roasted meat 3.

Dressed or boiled in a pot 2. | n 1 2 1 2 उख्यमुखासंसिद्धं शूले शूल्यं भटित्रं च ॥३२३॥ | Roasted on a spit 2.

Coagulated milk 2. | 1 2 किलाटः कूर्चिका चेति क्षीरस्य विकृती उभे ।

Raw sugar 1. गौडी Spirit distilled from molasses 1. | o 1 1 1 2 फाणितविकृतिर्गौडी मत्स्यण्डी खण्डशर्करा: ॥३२४॥ | Granulated sugar 2.

a कौशिका b मन्थिनी c काञ्चिकं d शुक्ति, सुक्त, शिक्ल e क्रूरं f तथोदनं भित्सा, तयोदनो भित्सा, तथोदनी भित्सा g पूपिका h तरणं, तरुणं, नरणं i क्षीरेयी, क्षैरेयं, क्षेरेयं j मिष्टान्नं भोजनं ज्ञेयं k वेसवार, वेशवार l करंबो m स्मृतम् n उख्यमुखायां, उख्यमुखाया o फाणितं, फणितं ।

[1]वल्भनम[2]भ्यवहारः [3]प्रत्यवसानं च [4]जेमनं [5]जग्धिः ।
Eating 11. [6]खादन[7]मशनं [8]भक्षण[9]माहारो [10]भोजनं [11]स्वदनम् ॥३२५॥
Enough 2. [1]पर्य्याप्त[2]मुपसम्पन्नं [1]तृप्तिः [2]सौहित्यमुच्यते । Satisfaction 2.
The remnants of food 2. [1]विघसो [2]भुक्तशेषं स्याद्[1]भुक्तोच्छिष्टं तु [2]फेलिका ॥३२६॥ The leavings of foods 2.
A vessel 4. [1]अमत्रं [2]भाजनं [3]पात्रं [4]स्थालं तुल्यार्थमिष्यते ।
A goblet. [1]गल्वर्कश्चा[a 2]नुतर्षश्च [3]चषकः [4]सरकः स्मृतः ॥३२७॥
Liquor shop. [1]आपानं [2]पानगोष्ठी स्यात्[b 1]सपीतिः [2]सहपानकम् । Drinking in company 2.
A relish, a stimulant to drink3. [c 1]उपदंशा[2]वदंशौ च [3]चक्षणं सम्प्रचक्षते ॥३२८॥

Intoxicating drink 24.

[1]मध्वा[2]सवः [3 d]शीधु [4]सुरा [5]प्रसन्ना ,
[e 6]परिस्रुता स्यान्[7]मदिरा [8]मदिष्ठा ।
[9]कादम्बरी [10]स्वादुरसा च [f 11]शुण्डा ,
[12]गन्धोत्तमा [13]माधवकश्च [14]हाला ॥३२९॥

[15]कल्यं [g 16]कश्यं तथा [17]मद्यं [18]मैरेयं [19]कापिशायनम् ।
[20]माध्वीक[21]मासवः प्रोक्तः [22 h]परिस्रुद्[23]वारुणी [24]मधु ॥३३०॥
Man, people 12. [1]मनुष्यो [2]मानुषो [3]मर्त्यो [4]मनुजो [5]मानवो [6]नरः ।
[7]पुमान्[8]पञ्चजनो [9]ना च [10]पुरुषः [11]पूरुषश्च [12]विट् ॥३३१॥

Learned, intelligent, wise 28.

[1]धीरो [2]धीमान् [3]लब्धवर्णो [4]विपश्चिद् ,
[5]वृद्धो [6]विद्वान् [7]प्राप्तरूपो[8]ऽभिरूपः ।
[9]सूरिः [10]प्राज्ञः [11]पण्डितः [12]सन्[13]मनीषी ,
[14]ज्ञो [15]दोषज्ञः [16]कोविदः स्यात्[17]प्रबुद्धः ॥३३२॥

a चानुकर्षश्च b स्यात्सम्पीतिः c उपदंशौ d सीधु e परिश्रुता, परिभृता f सुंडा, सुडा g कस्यं h परिश्रुद्वा, परिशुद्धा, परिभृद्धा ।

18 19 20 21 22 23 24
बुधः सुधीः कृती कृष्टिः कविर्व्यक्तो विशारदः ।
25 26 27 28
विचक्षणश्च मेधावी संख्यावान्मतिमान्मतः ॥३३३॥

Understanding, intellect 13.

1 2 3 4 5 6 7
प्रेक्षा प्रज्ञा प्रतिभा धीर्धिषणा शेमुषी मनीषा च ।
8 9 10 11 12 13
बुद्धिर्मतिश्च मेधा संख्या संवित्तिरुपलब्धिः ॥३३४॥

Skilful, clever, dexterous, accomplished 11.

1 2 3 4 5
चतुरः स्यात्क्षेत्रज्ञः कृतहस्तः कृतमुखश्च कृतकर्मा ।
6 7 8 9 10 11
दक्षः कुशलोऽभिज्ञो निष्णातः शिक्षितः प्रवीणश्च ॥३३५॥

Stupid, foolish, ignorant 11.

1 2 3 4 5 6
वैधेयो बालिशो बालो जडो जाल्मो यथोद्गतः ।
7 8 9 10 11
मूढो मन्दो विवर्णश्च मूर्खः स्यान्मातृशासितः ॥३३६॥

Bad, inferior, low, vile 13.

1 2 3 a 4 5 6 7
अर्वाणमणकमपसदमवममवद्यं निकृष्टमपकृष्टम् ।
8 9 10 11 12 13
अधमं चेलं काण्डं खेटं पापं च रेफसं प्राहुः ॥३३७॥

A thief, a robber 10.

1 2 3 4 5
ऐकागारिकतस्करदस्युप्रतिरोधकाः परास्कन्दी ।
6 7 8 9 10
चौरो मलिम्लुचः स्यात्परिमोषी पारिपन्थिकः स्तेनः ॥३३८॥

A thief who steals in the very sight of the possessor.

1
पश्यतो यो हरत्यर्थं स चौरः पश्यतोहरः ।
1 2 3
द्रव्यं ह्यपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतम् ॥३३९॥

Theft, stolen property 3.

A shoplifter, a cloth-stealer 2.

Bound, tied 3.

b 1 2 1 2 3
पाटच्चरः पटचौरो बद्धो नद्धश्च संयतः ।

Conferring happiness 4.

1 2 3 4
क्षेमङ्करो रिष्टतातिः शिवतातिः शिवङ्करः ॥३४०॥

Dependent, submissive 8.

1 2 3 4
परवांस्तु पराधीनो निघ्नः परवशस्तथा ।
5 6 7 8
परतन्त्रः परायत्तः परच्छन्दश्च गृह्यकः ॥३४१॥

Cruel, hard 6.

1 2 3 c 4 5 6
कठोरः कठिनः क्रूरः कक्खटः कर्कशो दृढः ।

Fat 5.

d 1 2 3 4 5
उच्यते बहुलः स्थूलः पीनः पीवा च पीवरः ॥३४२॥

a पशदम  b पाटचरः पट्टचौरो  c कखटः, कषडः, कषढः, कर्कशो दृढ उच्यते  d बहल ।

Master, lord 10.
[a][1]अर्यः [2]परिवृढः [3]स्वामी [4]प्रभुर्[5]नेता च [6]नायकः ।
[7]अधिभूर्[8]अधिपः प्रोक्तो [9]ह्यधीशो[10]ऽधिपतिस्तथा ॥३४३॥

An ascetic 7.
[1]तपस्वी [2]संयतः [3]शान्तो [4]मुनिर्[5]लिङ्गी [6]यतिर्[7]व्रती ।

A Buddihst mendicant 7.
[b][1]रजोहरणधारी च [2]श्वेतवासाः [3]सिताम्बरः ॥३४४॥
[4]नग्नाटो [5]दिग्वासाः [6]क्षपणः [7][c]श्रमणश्च [1]जीवको [2]जैनः ।

A Jain mendicant 5.
[3]आजीवो [d][4]मलधारी [5][e]निर्ग्रन्थः कथ्यते सद्भिः ॥३४५॥

A wicked person 10.
[1]दुर्जनः [2]पिशुनः [3]क्षुद्रो [4]नीचः [5]कर्णेजपः [6]खलः ।
[7]दोषग्राही [8]पुरोभागी [9]द्विजिह्वो [10]मत्सरी मतः ॥३४६॥

Mean, miserly stingy 9.
[1]कदर्य[2]हीन[3]कीनाश[4]किम्पचान[5]मितम्पचाः ।
[6]कृपण[7]क्षुल्लक[8]क्लीव[9]क्षुद्रा एकार्थवाचकाः ॥३४७॥

Poor 6.
[1]क्षुद्र[2]दरिद्रा[3]किञ्चन[4]दुर्विध[5]दुःस्थाश्च [6]दुर्गताः प्रोक्ताः ।

Low, vile 5.
[f][1]इतर[2]प्राकृत[3]पामर[4]पृथग्जना [5]वर्वराश्च तुल्यार्थाः ॥३४८॥

Hypocrite, illusive, crafty 10.
[g][1]दाण्डाजिनिकः [2]कुहकः [h][3]कार्पटिको [4]जालिकश्च [5]कौसृतिकः ।
[6]धूर्तो [7]व्यंसक उक्तो [8]मायावी [9]मायिको [10]मायी ॥३४९॥

Voracious 5.
[1]आद्यूनः [2]स्यादौदरिको [3]भक्षको [4]घस्मरो[5]ऽद्मरः ।

Insatiable.
[1]तमसेचनकं प्राहुस्तृप्तिर्यस्य न जायते ॥३५०॥

Maintained by others 4.
[1]परान्नः [2]परपिण्डादः [3]परजातः [4][i]परैधितः ।

Eating all kinds of food 2.
[1]सर्वान्नीनः [2]सर्वभक्षो [1]मांसादी [2][j]शौष्कलः स्मृतः ॥३५१॥

Meat-eater 2.

a आर्यः परिदृढ़ः b ऋजोहरिण, ररोहरण c श्रवणश्च d मधमारी e निर्गंथः, निग्रन्थः f इतरः g दण्डाजनिका, दांडाजनिकः, दंडाजनिकः, दांडोजनिकः, दंडाजिनकः h कापटिके i परैधिकः, परैधूंतः । j सौष्कलः, मौष्कलः, मौष्कलिः, मोष्कलिः ।

Prone or inclined to, bent on or intent upon, engrossed by 4.

1 2 3 4

उच्यते प्रवणः प्रह्वस्तत्परश्च परायणः ।

Conversant with 4.

1 a 2 3 4

व्युत्पन्नः प्रहतः क्षुण्णः संस्कृतश्च निगद्यते ॥३५२॥

Hankering after, addicted to, longing for 5.

1 2 b3 4 5

लोलुभं लोलुपं लोलं लालसं लम्पटं विदुः ।

Quick 3.

1 2 3 c1 d2

प्रतूर्णस्त्वरितस्तूर्णे उत्सुकः प्रसृतः स्मृतः ॥३५३॥ Desiring 2.

A valorous warrior 5.

1 2 3 4 5

शूरो वीरश्च विक्रान्तो भटश्चारभटो भवेत् ।

Timid, frightened, afraid, agitated 8.

1 2 3 4 5 6

दरितश्चकितो भीतस्त्रस्तो भीरुश्च कातरः ॥३५४॥

7 8

क्षुभितः शङ्कितश्चेति नातिनानार्थवाचकाः ।

Generous, noble 8.

1 2 3 4

महोत्साहो महोद्योगो महेच्छः स्यान्महामनाः ॥३५५॥

5 6 e7 8

उदात्तश्च तथोदीर्णो महात्मोदार उच्यते ।

Rich, wealthy 7.

1 2 3 4 5 6 7

आढ्यः समृद्धो धनवानिन ईशो धनीश्वरः ॥३५६॥

Diligent in supporting ones family 2.

f 1 g 2

अभ्यागारिकमिच्छन्ति कुटुम्बव्यापृतं जनाः ।

A traveller 5.

1 2 3 4 5

पान्थोऽध्वगोऽध्वनीनः स्यादध्वन्यः पथिकस्तथा ॥३५७॥

Light footed, swift 3.

h1 2 3 1 2

जङ्घालो जवनो वेगी पाथेयं शम्बलं स्मृतम् । Provender for journey 2.

A guest 4.

i 1 2 j 3 4

आवेशिकः प्राघुणक आगन्तुरतिथिः स्मृतः ॥३५८॥

Hospitality 3.

1 2 3

आतिथेयं तथातिथ्यमातिथेयी च कथ्यते ।

A beggar 4.

1 2 3 4 k

अर्थी मार्गणकः प्रोक्तो याचकश्च वनीपकः ॥३५९॥

Begging, solicitation 5.

1 2 3 4 5

अध्येषणैषणा याच्ञा याचना प्रार्थना स्मृता ।

Hungry 5.

l 1 2 3 4 5

क्षुद्वान्बुभुक्षितः प्सातो जिघत्सुः क्षुधितस्तथा ॥३६०॥

a प्रहितः b प्रोक्तं c उत्सकः d प्रस्ततः, प्रसितः e महात्म्यो, माहात्म्यो f आभ्यागा g कुटम्ब h जंवालो, जांघालो, जंघाजो i आवेशकः j प्राघुणिक, प्राद्युणिक k वनीयकः l क्षुद्वान् बुभुक्षितप्सतो, क्षुद्वान्, बुभुक्षितप्सातो ।

| | | |
|---|---|---|
| Hunger 6. | अशनाया[1] बुभुक्षा[2] प्सा[3] जिघत्सा[4]क्षुत्[5]क्षुधा[6]: समाः । | |
| Angry 5. | कोपनः[1] क्रोधनः[2] क्रोधी[3] रोषणः[4] स्यादमर्षणः[5] ॥३६१॥ | |
| Anger 5 | कोपः[1] क्रोधस्तथा[2]मर्षो[3] रोषः[4] प्रतिघ[5] उच्यते[a] । | |
| Thirsty 4 | तृषित[1]स्तर्षितः[2] प्रोक्तः पिपासुश्च[3] पिपासितः[4] ॥३६२॥ | |
| Thirst 5 | उदन्या[1] तर्ष[2]तृट्[3]तृष्णा[4]पिपासाश्च[5] समाः स्मृताः । | |
| Covetous, greedy 6 | तृष्णको[b][1] गर्धनो[2] गृध्नु[3]र्लिप्सु[4]र्लुब्धो[5]ऽभिलाषुकः[6] ॥३६३॥ | |
| Covetousness, desire 6. | तृष्णा[1]भिलाषो[2] लिप्सा[3][c]शा[4] धनाया[5] गर्धनो[6]च्यते । | |
| Dumb, speechless 2. | अधरो[1] हीनवादी[2] स्यात्प्रसक्तः[1] प्रसृतः[d][2] स्मृतः ॥३६४॥ | Longing for 2. |
| A slave, a servant. | दासो[1] दासेरक[2]श्चेटो[3] भुजिष्यः[4] किङ्करो[5] मतः । | |
| Gentle or pleasant discourse 2. | श्लक्ष्णो[1] मधुरवाक्[2] प्रोक्तः स्थूललक्षो[1] बहुव्ययी[2] ॥३६५॥ | Munificient 2. |
| Affable in address. | प्रियवाग्दानशीलश्च[1] वदान्यः[2] परिकीर्तितः । | |
| Despised 4. | भवेदक्षिगतो[1] द्वेष्यः[2] प्रणाय्यो[e][3]ऽसंमतो[4] मतः ॥३६६॥ | |
| Handsome pleasing 5. | चक्षुष्यः[1] सुभगो[2] ज्ञेयो वल्लभो[3] दयितः[4] प्रियः[5] । | |
| A poltroon, a dunghill-cock 3. | गेहेनर्दी[1] गेहेशूरः[2] पिण्डीशूरश्च[3] कथ्यते ॥३६७॥ | |
| The dog in the manger 1. | स्थानस्थो यो परान् द्वेष्टि गोष्ठश्वं[1] तं विदुर्बुधाः । | |
| | असौ पञ्चजनीनः स्याद्यो भाण्डादिरतो नरः ॥३६८॥ | An actor, a mimic. |
| A passionless saint 2. | वैरङ्गिको[1] विरागार्हो[2] धनवानस्तिमान्[1][f][2]मतः । | Rich 2. |
| A messenger 2. | प्रेष्यः[g][1] प्रोक्तः परिस्कन्दः[2] कर्मशूरश्च[1] कर्मठः[2] ॥३६९॥ | A careful worker, one who works scrupulously. |
| Skilful, clever. | अलङ्कर्मीण[1] इत्युक्तः कर्मशीलस्तु यः पुमान् । | |
| Swift, quick 2. | उत्ताल[1]स्त्वरितो[2] ज्ञेयो विश्रब्धः[1] स्थिर[2] उच्यते ॥३७०॥ | Trustworthy, reliable 2. |

a इष्यते b तृश्चिको c लिप्सा च शायनाया, लिप्सा च शाधनाया, लिप्सा स्याद्धनाया, लिप्सास्याद्धनाया d प्रसितः e प्राणघः, प्रेणायः, प्राणाच्छायः, प्रोणाद्यः, प्राणाय्ये f स्तिमान्स्मृतः, स्तिवान्मतः, स्तिभवामतः g प्रेक्षः प्रेक्ष्यः ।

| | | |
|---|---|---|
| | तीक्ष्णोपायेन योऽन्विच्छेत्स [1]आयःशूलिको मतः । | A man who, in order to gain an object, uses forcible instead of gentle means. |
| Painful. | [1]अरुन्तुदः [2]स्याद्व्यथको [1]वियातो [2]धृष्ट उच्यते ॥३७१॥ | Bold, impudent. |
| Hurtful. | [1]शरारु[2]र्घातको [3]हिंस्रो [4]नृशंसः [5]क्रूरकर्मकृत् । | |
| Righteous 3. | [1]साधुः [2]सज्जन [3]आर्यः [1]स्याद्गृहमेधी [2]गृहाधिपः ॥३७२॥ | A house holder 2. |
| | [1]कुशाग्रीयमतिः प्रोक्तः [2]सूक्ष्मदर्शी च यः पुमान् । | Acute, sharp-minded 2. |
| Intelligent, thoughtful 2. | [1]चिद्रूपः [2]स्यात्सहृदयः [1]सहस्तः [2]शिक्षितायुधः ॥३७३॥ | Skilled in handling weapons 2. |
| An eloquent. | [1 a]समुखः स खलु प्रोक्तो यो वक्ति प्रतिभान्वितः । | |
| | नीलीरागः स विज्ञेयः स्थिरप्रेमा च यः पुमान् ॥३७४॥ | Firm and constant in affection or attachment. |
| Unsteady in affection or attachment. | क्षणमात्रानुरागी च हरिद्राराग उच्यते । | |
| Best 2. | [b 1]शाली [2]श्रेयान[1]धृष्टौ च प्रोक्तौ [2]शालीनशारदौ ॥३७५॥ | Diffident, bashful. |
| | दूरार्थानर्थसन्दर्शी [1]दीर्घदृष्टिः प्रकीर्तितः । | Foresighted. |
| Quick witted. | [1]प्रत्युत्पन्नमतिर्ज्ञेयस्तत्कालोत्पन्नधीर्नरः ॥३७६॥ | Talking no matter, deserving no matter, deserving no reply, talking nonsense. |
| Fatalist. | यद्भविष्यो [1]दैवपरो [1]यद्वदः [2]स्यादनुत्तरः । | |
| Stupid 2. | [1]अज्ञो [2]मातृमुखः प्रोक्तो [1]दुर्मुखो [2]मुखरः स्मृतः ॥३७७॥ | A foul-mouthed 2. |
| Speaking improperly 2. | [1]कद्वदो [2]गर्ह्यवादी [c]स्यात्[1]कट्वरः [2]कुत्सितो भवेत् । | Contemptible despised 2. |
| At the end of compounds, anything excellent or prominent of its kind. | [d 1]प्रकाण्डोद्घौ प्रशंसायामाक्षेपे [1]हतकः स्मृतः ॥३७८॥ | Taunt. |
| Proud 2. | [1]अहंयुः [2]स्यादहङ्कारी [1]शुभंयुः [2]शुभसंयुतः । | Happy 2. |
| Independent. | [1]यथाकामी [2]स्वरुचिः [3]स्यात्स्वच्छन्दो [4]निरवग्रहः ॥३७९॥ | |
| Searching, enquiring 2. | [1]अन्वेष्टा[2]नुपदी प्रोक्तः [1]प्रतिभू[2]र्लग्नकः स्मृतः । | Surety sponsor 2. |
| Convalescent 3. | [1]रोगादुन्मुक्त [2]उल्लाघः [1]कल्यो [e 2]वार्त्तो [3]निरामयः ॥३८०॥ | Healthy 3. |
| Long lived 2. | [1]जैवातृकः [2]स्यादायुष्मान् [1 f]बलवानं[2]सलो मतः । | Strong 2. |
| Goat-herd 2. | [1]जाबालः [2]स्यादजाजीवः [1]कम्रः [2]कामी च [3]कामुकः ॥३८१॥ | Lustful 3. |

a सुमुखः b शीली c स्यात्कद्वरः, करद्वरः, कांडूरः
d प्रकांडोद्यौ, प्रकांडोद्यौ, प्रकांडाब्धौ e नार्यश्च कथ्यते, वात्तश्च कथ्यते, नार्त्तश्च कथ्यते f बलवान्मांसलो ।

Libertine, a gallant. — वेश्यापतिर्भुजङ्गः स्याद्विटः पल्लवकः[a] स्मृतः ।

Confused 2. — विहस्तो व्याकुलः प्रोक्तः कुण्ठो मन्दः क्रियासु यः ॥३८२॥ — Slow at work 2.

Active 2. — क्रियावान्कर्मसूद्युक्तो दीर्घसूत्रो[b] जडक्रियः । — Delatory, sluggard 2.

Insulted 2. — निकृतो[c] विप्रलब्धः स्यात्समुन्नद्धोऽतिगर्वितः ॥३८३॥ — Conceited 2.

Respected, honoured 4. — प्रतीक्ष्यः कथ्यते पूज्यः पूजितोऽपचितो भवेत् ।

Envious 2. — ईर्ष्यालुः कुहनः प्रोक्तो जारो ह्युपपतिः स्मृतः ॥३८४॥ — A paramour 2.

Straight for ward 2. — सरलो दक्षिणो ज्ञेयो विदग्धश्छेक उच्यते । — Shrewd, clever 2.

Looking up wards 2. — उत्पश्यमुन्मुखं विद्यान्न्युब्जं विद्यादधोमुखम् ॥३८५॥ — Bent downwards 2

Sitting 2. — आसीन उपविष्टः स्यादूर्ध्व[d] ऊर्ध्वन्दमः स्थितः । — Erect, raised, standing up 3.

Drunk, intoxicated 2. — क्षीवो मत्तः क्षमः शक्तः प्रगल्भः प्रौढ उच्यते ॥३८६॥ — Able 2; bold 2.

Desiring, longing for 2. — उत्क उत्कण्ठितः प्रोक्तो विक्लवो विह्वलः स्मृतः । — Agitated 2.

Indolent, lazy 6. — अलसः शीतको[e] मन्दो जडो जिह्मश्च मन्थरः ॥३८७॥

Deformed 2. — पोगण्डो विकलाङ्गः[f] स्याल्लोहलोऽव्यक्तवाग्भवेत् । — Speaking indistinctly 2.

Gambler 2. — कितवः स्याद्द्यूतकारो द्यूतमक्षवती भवेत् । — Gambling 2.

Playing with dice 2. — अक्षो दुरोदरं[g] प्रोक्तं सभिको द्यूतकारकः ॥३८८॥ — The keeper of a gambling house 2.

Examiner 2. — परीक्षकः कारणिको गृह्यः पक्ष उदाहृतः । — A partisan, a follower 2.

Noble, well-born 2. — अभिजातः कुलीनः[h] स्यात्कुचरः कुटिलाशयः ॥३८९॥ — Malevolent 2.

An elephant rider 2. — निषादिनो गजारोहा अश्वारोहास्तु सादिनः । — A horse rider.

Charioteer 2. — रथिनः स्यन्दनारोहा नावारोहास्तु नाविकाः ॥३९०॥ — A boatman.

a पल्लविकः b दीर्घसूत्री c निष्कृतो, निःकृतो, निःकृष्टो d स्यादूर्द्ध्वमूर्द्ध्वंदमः स्थितः, स्यादूर्द्ध्वमूर्द्ध्वमवस्थितः, स्यात् ऊर्ध्वंमूर्ध्वमदस्थितः, स्यात ऊर्ध्वमूर्ध्वमदस्थितः, स्यादूर्द्धऊर्द्धदमस्थितिः e सीतको, शीतगो f विपुलांगः g दरोदरं h कुलीनश्च कुचरः ।

| | | |
|---|---|---|
| A Brahaman 10. | [1]ब्राह्मणो [2]वाडवो [3]विप्रो [4]भूमिदेवो [5]द्विजोत्तमः । | |
| | [6]अग्रजन्मा [7]द्विजन्मा च [8]षट्कर्मा [9]सोमपा [10]द्विजः ॥३९१॥ | |
| The three superior castes. | [1]ब्राह्मणः [2]क्षत्रियो [3]वैश्यस्त्रयो [(3)] वर्णा द्विजातयः । | A kind of sudra caste |
| The sudra caste 2. | [1]शूद्रस्[2]तुरीयवर्णः स्यात्तद्भेदास्[1]त्वन्त्यजाः स्मृताः ॥३९२॥ | The four Ashramas as specified in Vedas. (1) Brahmacharya (2) Grihastha (3) Vānprastha, (4) Sanyāsa. |
| | ब्रह्मचार्यादयो वेदे प्रोक्ताश्चत्वार आश्रमाः । | |
| | शूद्रोऽगृहस्थ एव स्यात्क्षत्रियो न यतिर्भवेत् ॥३९३॥ | |
| | ब्रह्मचारी भवेद्वर्णी [1]गृहस्थः [2]स्नातकस्तथा । | A house-holder; Brahman just returned from the house of his preceptor and became an initiated house holder 2. |
| A hermit, one in the third order of his religious life 2. | [1]वैखानसो [2]वानप्रस्थः [a][1]कर्मसंन्यासिको [2]यतिः ॥३९४॥ | An ascetic, one who has renounced the world and controlled his passions 2. |
| One well versed in vadas 4. | [1]अनूचानः [2]सर्ववेदः [3]श्रोत्रियश्[4]छान्दसो मतः । | |
| The son of a famous father. | [1]प्रख्यातात्पितुरुत्पन्न [2]आमुष्यायण इष्यते ॥३९५॥ | |
| Lineage, family, race 6. | [1]अन्ववायो[2]ऽन्वयो [3]वंशो [4]गोत्रं [5][b]चाभिजनः [6]कुलम् । | |
| Conduct, character, behaviour 4. | [1]चरित्रं [2]चरितं [3]शीलं [4]चारित्रं च समं स्मृतम् ॥३९६॥ | |
| | वृत्ताध्ययनसम्पत्तिरिष्यते [1]ब्रह्मवर्चसम् । | Divine glory, spiritual pre-eminence resulting from sacred knowledge. |
| Religious studentship, celebacy, self-restrained. | ब्रह्मचर्यं बुधाः प्राहुः समस्तेन्द्रियसंयमम् ॥३९७॥ | |
| | संज्ञेय [1]उपसङ्ग्राह्यो योऽभिवाद्यो यथाविधि । | To be respectfully saluted, respectable, venerable. |
| Respectful salutation. | [1]उपसङ्ग्रहणं चापि प्राहुः सन्तोऽभिवादनम् ॥३९८॥ | |
| | निवृत्तेन्द्रियलौल्यस्तु श्रान्तः [c]शान्तश्च कथ्यते । | Calm, peaceloving, free from lust. |
| Patient of bodily, mortifications or austerities etc. 2. | [1]तपःक्लेशसहो [2]दा तो [1]ह्यन्तर्वाणिश्च [2]शास्त्रवित् ॥३९९॥ | Skilled or versed in scriptures, very learned 2. |
| A teacher 2. | [1]अध्यापक [2]उपाध्यायो [1]व्याख्या [2]विवरणं स्मृतम् । | Commentary 2. |
| A pupil 5. | [1]शिष्या[2]न्तेवासिनौ [3]छात्रः [d][4]शैक्षः [5]प्राथमकल्पिकः ॥४००॥ | |
| An obstacle 4. | [1]विघ्नो[2]ऽन्तरायः [3]प्रत्यूहो [4]व्यवायश्च प्रकीर्तितः । | |
| A complete perusal 2. | [1]साकल्यवचनं प्राज्ञैः [2][e]पारायणमुदाहृतम् ॥४०१॥ | |

a कर्मसां, कर्मसो b चाभिजनं, चाभिजनकुलम् c शांतः श्रांतश्च
d शैक्ष्यः, शिष्यः, शैष्यः e मितिस्मृतम् ।

| | | |
|---|---|---|
| Oral tradition 4. | 1 आम्नायः 2 सम्प्रदायः 3 स्यात्पारम्पर्यं 4 गुरुक्रमः । | |
| Moral 2. | 1 प्रयतः 2 स्यादनुच्छिष्टः 1 a संशितश्च 2 सुनिश्चितः ॥४०२॥ | Decided 2. |
| An astronomer, an astrologer 8. | 1 सांवत्सरो b 2 ज्योतिषिको 3 ज्ञानी 4 मौहूर्तिकस्तथा । | |
| | 5 कार्तान्तिकस्तु 6 दैवज्ञ 7 आदेशी 8 गणकः स्मृतः ॥४०३॥ | |
| A man of the first three classes who has lost his caste owing to non-performance of the principal purifactory rites 2. | 1 व्रात्यः 2 संस्कारहीनः 1 स्यादवकीर्णी 2 क्षतव्रतः । | A religious student who has committed an act against his vow of celibacy 2. |
| wicked 2. | 1 शिश्विदानो 2 दुराचारस्त्यक्ताग्निर्वीरहा 2 द्विजः ॥४०४॥ | A brahman who has allowed his sacred fire to become extinct. |
| Religious hypocrite, an imposter 2. | c 1 धर्मध्वजी 2 लिङ्गवृत्तिरस्वाध्यायो 1 2 निराकृतिः ॥ | A Brahman who neglects his duties of his caste 2 |
| One who lives by arms, a warrior, a soldier 2. | 1 शस्त्राजीवः d 2 काण्डस्पृष्टो 1 ब्रह्मबन्धुर्द्विजोऽधमः 2 e ॥४०५॥ | An unworthy brahman, a contemptuous term for a brahaman. |
| One who gets a living only by the merit of his caste. | 1 जातिमात्रोपजीवी च कथ्यते f 2 ब्राह्मणब्रुवः । | |
| An exclamation uttered by a brahman in the sense of "help ! help !" | g 1 अब्रह्मण्य 2 मवध्यं स्याद् 1 ब्रह्मण्यं 2 ब्रह्मणे हितम् ॥४०६॥ | Fit for a brahaman. |
| The holy sacrificial cord worn by the Hindus over their left shoulder and under the right. | 1 उपवीतं 2 ब्रह्मसूत्रं प्रक्षिप्तं दक्षिणे करे । | |
| | प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥४०७॥ | |
| | आचमनमुपस्पर्शनमाप्लवनं स्नानमिष्यते 1 सवनम् । | Bathing, purifactory ablution, extracting the somā juice & drinking it. |
| Washed 3. | 1 निर्णिक्तं 2 प्रक्षालितमाहु 3 र्धौतं च तुल्यार्थम् ॥४०८॥ | |
| | 1 पाराशरी 2 व्रती 3 भिक्षु 4 र्मस्करी h 5 पारिरक्षिकः । | |
| A religious mendicant 9. | 6 परिव्राजक 7 स्तपस्वी 8 कर्मन्दी 9 तापसः स्मृतः ॥४०९॥ | |
| An upper garment 3 | i 1 वैकक्ष 2 मुत्तरासङ्गः प्रोक्ता 3 वृहतिका तथा । | |
| Loin cloth. | 1 पर्यस्तिका 2 परिकरः 3 पर्यङ्कश्चेति कथ्यते ॥४१०॥ | |
| A cloth to cover the privities 2, | 1 कक्षापटः 2 स्यात्कौपीनं 1 कुण्डिका च 2 कमण्डलुः । | A water pot 2, |
| A staff. | 1 आषाढो व्रतिनां दण्डो 1 व्रतिनामासनं 2 j वृषी ॥४११॥ | The seat of an ascetic 2. |

a शंसितश्च b ज्योतिषको c धर्मध्वजी d कांडपृष्टो, कांडपृष्टे e द्विजाधमः, द्विजोत्तमः f ब्रह्मणो, ब्राह्मणे अब्रह्मण्यं, अब्रह्मण्यमवद्यं g अब्रह्मण्यवर्ण्य h पारिरक्षकः, परिरक्षकः i वेकक्ष, वेकष्य, वैकक्ष्य j वृसी, भृसी ।

A sage
1 2 3 4
ऋषिस्त्रिकालदर्शी स्यान्मुनिर्वाचंयमो मतः ।

Name of Valmiki the reputed author of the Ramayan,
1 2 3
प्राचेतसस्तु वाल्मीकिर्मैत्रावरुण उच्यते ॥४१२॥

Name of Agastya.
1 2 3 4
उक्तोऽगस्तिरगस्त्यो लोपामुद्रापतिश्च घटयोनिः ।

Name of Vyas.
1 2 3 4
सात्यवतेयः पाराशर्यो द्वैपायनो व्यासः ॥४१३॥

Sacrifice 12.
1 2 3 4 5 6 7
यागो यज्ञः क्रतुः स्तोमः सप्ततन्तुर्मखोऽध्वरः ।
8 9 10 11 12
वितानं संस्तरो बर्हिः सवः सत्रं च कथ्यते ॥४१४॥

Fire producing wooden stick 2.
1 2
निर्मन्थकाष्ठमरणिः प्रणीतोऽग्निश्च संस्कृतः ।
Fire consecrated by prayers.

An altar especially, prepared for sacrifice 2.
1 a 2 1 2
वेदी परिष्कृता भूमिः पात्रमुक्तं स्रुगादिकम् ॥४१५॥
A sort of wooden ladle used for pouring clarified butter on Sacrificial fire.

An oblation of rice or barley of the boiled in milk for presentation to Gods 2.
1 2 1 b 2
हव्यपाकश्चरुः प्रोक्तः सान्नाय्यं हविरुच्यते ।
An oblation of of burnt offering, also of clarified butter, rice or barley mixed with Ghee.

Curd of milk and whey, a mixture of boiled and coagulated milk.
1 c
शृते क्षीरे दधिक्षिप्तमामिक्षा कथ्यते बुधैः ॥४१६॥

1
उपाकृतस्तु विज्ञेयो मन्त्रेण प्रोक्षितः पशुः ।
A sacrificial animal killed during the recitation or prescribed prayers.

Offered as an oblation to fire 1.
1 2 1 2
हुतं वषट्कृतं ज्ञेयं यज्ञान्तोऽवभृथः स्मृतः ॥४१७॥
The end or completion of a principal sacrifice.

One who offers a sacrifice to Brahaspati.
1
वृहस्पतिसवेनेष्टं येनासौ स्थपतिर्भवेत् ।

सर्ववेदास्तु विज्ञेयो दत्तसर्वस्वदक्षिणः ॥४१८॥
One who performs a sacrifice by giving away all his wealth.

Gift, donation 10.
1 2 d 3 4 5
विश्राणनं विहापितमंहतिरपवर्जनं वितरणं च ।
e 6 7 8 9 10
निर्वपणं च स्पर्शनमुत्सर्गः स्यात्प्रदेशनं दानम् ॥४१९॥

One who performs sacrifice 5.
1 2 3 4 5
यष्टा च यजमानः स्यादादेष्टा दीक्षितो व्रती ।

Performer of many sacrifices 2.
1 2 1 2
इज्याशीलो यायजूको यज्वा स्यादासुतीवलः ॥४२०॥
One who performs sacrifices in accordance with vedic precepts 2.

A king 12.
1 2 3 4 5 6 7
राजा राजन्यो राट् प्रजापतिः क्षत्रियो नृपः क्षत्रम् ।
8 9 10 11 12 f
मूर्धाभिषिक्तभूपतिपार्थिवनरदेवलोकपालाः स्युः ॥४२१॥

a परिस्कृता b साम्नायं, साम्नार्यहविरुच्यते c आमिष्या, आमक्षः d विहायनमंहि, विहायितमं, विहायतमं, विदायनमं e निर्वापणं, निव्रापणं f पालाश्च ।

